य: । कृष्णः । केशी । असुरः । स्तम्बऽजः । उत । तुण्डिकः[1] ।
अरायान् । अस्याः[2] । मुष्काभ्याम् । भंसंसः । अप । हन्मसि ॥ ५ ॥

यः प्रसिद्धः कृष्णः कृष्णवर्णः केशी केशवान् प्रकृष्टकेशः एतन्नामा असुरः। तथा स्तम्बजः स्तम्बे जातः असुरः । उत अपि च तुण्डिकः । तुण्डं मुखम् । कुत्सितमुखः एतन्नामा असुरः एते सर्वे अरायाः दुर्भगास्तान् अरायान् अस्या गर्भिण्याः मुष्काभ्याम् । स्त्रीणामपि मुष्कम् अस्ति । 'मुष्कः पुंसो न तु स्त्रियाः' इति स्मरणात् । मुष्काख्यप्रदेशाभ्यां तत्रापि भंससः कटिसंधिप्रदेशाद् अप हन्मसि अपहन्मः ।

अनुजिघ्रं प्रमृशन्तं क्रव्यादमुत रेरिहम् ।
अरायाँल्छ्वकिष्किणो[3] बजः पिङ्गो अनीनशत् ॥ ६ ॥

अनुऽजिघ्रम् । प्रऽमृशन्तम् । क्रव्यऽअदम् । उत । रेरिहम् ।
अरायान् । श्वऽकिष्किणः । बजः । पिङ्गः । अनीनशत् ॥ ६ ॥

अनुजिघ्रम् । अनुजिघ्रतीति अनुजिघ्रः । घ्रा गन्धोपादाने । 'पाघ्राध्माधेड्दृशः शः' (पा ३,१,१३७) इति शः । 'पाघ्रा' (पा ७,३,७८) इत्यादिना जिघ्रादेशः । आघ्रायैव हिंसकम् इत्यर्थः । तथा प्रमृशन्तम् प्रमृश्यैव हन्तारं क्रव्यादम् मांसभक्षकम् । उत अपि च रेरिहम् लीढ्वैव हन्तारम् उक्तव्यतिरिक्तान् अन्यान् अरायान् अधनान् अलक्ष्मीकान् श्व[4] । अरायविशेषणं किष्किण[5] इति । किप्किप् इति शब्दं कुर्वन्तस्तान् । यद्वा किष्क हिंसायाम् इति चुरादौ पठ्यते (?) । नित्यं हिंसकान् पिङ्गः पिशङ्गवर्णो बजः सर्षपः अनीनशत् भृशं नाशितवान् । नाशयतु वा । "श्वेताश्च पीताश्च[5] सर्षपान् संपात्य अभिमन्त्र्य गर्भिण्या बध्नाति' (कौ. के ३५,२०) इति विनियोगाभिधानाद् अत्र पीतसर्षपाणां विधानयोग उक्तः ।

यस्त्वा[6] स्वप्ने[7] निपद्यते भ्राता भूत्वा पितेव च ।
बजस्तान्त्सहतामितः क्लीबरूपांस्तिरीटिनः ॥ ७ ॥

यः । त्वा । स्वप्ने । निऽपद्यते । भ्राता । भूत्वा । पिताऽइव । च ।
बजः । तान् । सहताम् । इतः । क्लीबऽरूपान् । तिरीटिनः ॥ ७ ॥

१. तुडिकः P.　२. अस्याः P.　३. 'यांश्च कि° S'; अरायांन्स्व° Bh; °किः किणो A,R.　४. वेतु: संपा.　५. श्वेतावत्पीताश्च S'.　६. यस्त्वा पै १६,७९,८.　७. सुप्तां पै.

हे **गर्भिणि** यो **राक्षसादिः** त्वा **त्वां** स्वप्ने **निद्रावस्थायां** भ्राता **सहोत्पन्न इव** भूत्वा **विश्वासं जनयन्** निपद्यते **निपतति अभिगच्छति । तथा यश्च** पितेव **जनक इव तद्रूपधारी भूत्वा स्वप्ने त्वां निपद्यते । यद्वा तान् इति बहुवचनेन निर्देशात् यः कश्चित् स्वप्ने स्वकीयसहजरूपेण निपद्यते यश्च**[1] **भ्राता भूत्वा यस्तु पितेव भूत्वेति योज्यम् । भ्रात्रादिरूपेण आगत्य गर्भध्वंसनम् अन्यत्राप्याम्नायते—**

'यस्त्वा भ्राता पतिर्भूत्वा जारो भूत्वा निपद्यते ।
प्रजां यस्ते जिघांसति तमितो नाशयामसि ॥" (ऋ १० १६२,५) **इति ।**

तान् **सर्वान्** बजः **श्वेतसर्षपः** सहताम् **अभिभवतु** इतः **अस्माद् गर्भिणीसकाशात् । तथा** क्लीबरूपान् **षण्ढरूपं धृत्वा आगतान्** तिरीटिनः **अन्तर्धानेन अटतश्च । सहताम् इति संबन्धः ।**

**यस्त्वा स्वपन्तीं**[2] **त्सरति**[3] **यस्त्वा**[4] **दिप्सति जाग्रतीम्**[5] **।**
**छायामिव प्र तान्त्सूर्यः परिक्रामन्ननीनशत् ॥ ८ ॥**

यः । त्वा । स्वपन्तीम् । त्सरति । यः । त्वा । दिप्सति । जाग्रतीम्[5] ।
छायाम्ऽइव । प्र । तान् । सूर्यः । परिऽक्रामन्[6] । अनीनशत् ॥ ८ ॥

हे **गर्भिणि** त्वा **त्वां** यः **राक्षसादिः** स्वपन्तीम् **प्रबोधरहितां स्वापकाले** चरति[7] **गच्छति ।** यश्च जाग्रतीम् **प्रबुद्धां प्रबोधकाले** त्वा दिप्सति **दम्भितुम् इच्छति । दम्भु दम्भने ।** 'सनीवन्तर्ध' ( पा ७,२,४९ ) **इत्यादिना इड्विकल्पः ।** 'दम्भ इच्च' ( पा ७,४,५६ ) [8]**इति अचः स्थाने**[8] **इत्वम् । अत्र तान् इति बहुवचननिर्देशाद् योयः स्वपन्तीम् योयो जाग्रतीम् इति वीप्सार्थौ द्रष्टव्यः ।** तान् **सर्वान् यथा** सूर्यः परिक्रामन् **आकाशे परिभ्रमन्** छायाम् **अन्धकारं नाशयति तद्वत् अयं सर्षपः** [9]**सर्वम् अमङ्गलम्**[9] **आक्रम्य** प्रानीनशत् **प्रकर्षेण विनाशितवान् नाशयतु वा ।**

**यः कृणोति मृतवत्सामवतोकामिमां स्त्रियम् ।**
**तमोषधे त्वं नाशयास्याः कमलमञ्जिवम् ॥ ९ ॥**

यः । कृणोति । मृतऽवत्साम् । अवऽतोकाम् । इमाम् । स्त्रियम् ।
तम् । ओषधे । त्वम् । नाशय । अस्याः । कमलम् । अञ्जिऽवम् ॥ ९ ॥

यो **राक्षसादिः** स्त्रियम् इमां **गर्भिणीं** मृतवत्साम् **मृतपुत्रां** कृणोति **करोति । तथा** अवतोकाम् **अवपन्नगर्भां वा कृणोति ।** तं **दुष्टम् हे** ओषधे **सर्षपरूपे** त्वं नाशय ।

---

१. पश्चा S'. २. यस्त्वां सुप्तां पै १६,७९,७. ३. त्सरति R; छिनत्ति पै. ४. यश्च पै. ५. जाग्रतिम् WM. ६. °क्रमन् P. ७. वैतु. मंपा. ८. इत्वे- स्ववस्थाने S'. ९. सर्वमंगलम् S'.

स्याः कमलम् गर्भद्वारम् अभिवम् अभिव्यक्तिमत् ग्लक्षणोपेतं वा । कुर्विति शेषः ।

ये शालाः परिनृत्यन्ति सायं गर्दभनादिनः ।
कुसूला ये च कुक्षिलाः ककुभाः करुमाः[1] स्त्रिमाः[2] ।
तानोषधे त्वं गन्धेन विषूचीनान् वि नाशय ॥ १० ॥

। शालाः । परिऽनृत्यन्ति[3] । सायम् । गर्दभऽनादिनः ।
सूलाः । ये । च । कुक्षिलाः । ककुभाः[4] । करुमाः । स्त्रिमाः ।
ान् । ओषधे । त्वम् । गन्धेन । विषूचीनान् । वि । नाशय ॥ १० ॥

ये पिशाचाः सायं समये गर्दभनादिनः गर्दभवद् आक्रोशन्तः सन्तः । र्तर्युपमाने' (पा ३,२,७९) इति णिनिः । शालाः परिनृत्यन्ति शालानां गृहाणां रितो[5] नृत्यन्ति । एवं ये च कुसूलाः कुसूलाकृतयः परिनृत्यन्ति । ये च कुक्षिलाः इत्कुक्षयः । ककुभाः अर्जुनवृक्षवद् भयंकराकृतयः । एवं खरुमाः[6] श्रुमाः[6] च नाना- रैर्ध्वनिभिश्च विशिष्टाः सन्तः शालायाः परितो नृत्यन्ति तान् सर्वान् हे षधे गौरसर्षप पीतसर्षप वा त्वं गन्धेन तव परिमलेन विषूचीनान् विष्व- ञ्चनान् कृत्वा वि नाशय ।

इत्यष्टमकाण्डे तृतीयेऽनुवाके तृतीयं सूक्तम् ।

'ये कुकन्धाः'[6] इति सूक्तस्य पूर्वसूक्तेन सह उक्तो विनियोगः ।

ये [7]कुकुन्धाः कुकूरभाः कृत्तीर्दूर्शानि[7] बिभ्रति ।
क्लीबा इव प्रनृत्यन्तो वने ये कुर्वते[8] घोषं तानितो नाशयामसि ॥११॥

। कुकुन्धाः । कुकूरभाः । कृत्तीः । दूर्शानि । बिभ्रति ।
लीबाःऽइव । प्रऽनृत्यन्तः । वने । ये । कुर्वते । घोषम् । तान् । इतः । नाशयामसि ॥ ११ ॥

ये प्रसिद्धाः कुकन्धाः[6] एतत्संज्ञकाः पिशाचाः । कीदृशाः । कुकूरवाः[6] कुकू त्येवमात्मकेन रवेण युक्ताः कुक्कुटवद् ध्वानिं कुर्वाणाः कृत्यः[6] हिंसाकर्मभिः

१. खरुमा S, गा.; °मा D.K,Bh,Km,Sm,V,Cs,M,W,O.　२. स्त्रिमाः B,I,Sm; माः A,W; श्रमाः S; श्रुमाः गा.　३. प्रति° P,P२,J; परि° अपि J.　४. ककुभाः P. . परि S'.　६. वैतु. संपा.　७. ककुन्धाः करूरभाः कृत्यैर्दू° पै १६,८०,१; °दूष्यानि S'. . कुर्वतो S'.　९. कुकुधाः P२.